TRIVANDRUM SANSKRIT SERIES.

NO. X.



THE

# MÂTANGALÎLA

OF

# NÎLAKAṆṬHA.

Edited with Notes

BY

T. GAṆAPATI ŚÂSTRÎ

*Curator of the Department for the publication of Sanskrit manuscripts,*

TRIVANDRUM.

---

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

---

TRIVANDRUM:

PRINTED AT THE TRAVANCORE GOVERNMENT PRESS

1910.

---

॥ श्रीः ॥

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १०.

# मातङ्गलीला ।

श्रीनीलकण्ठकृता

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधिता ।

सा च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशिता ।

कोळम्बाब्दाः १०८५, क्रैस्तवाब्दाः १९१०.

# PREFACE.

Matangalila (मातङ्गलीला) is an elementary treatise on the science of elephants. The original palm leaf manuscripts of this work are these:—

1. क (In Malayalam characters.)
2. ख (In Tamil Grantha characters.)
3. ग (In Malayalam characters.)

Of these, the first two were obtained from the Palace Library and the third was lent by Brahmasri Kesavar Sankaranârâyanar, Kalpakamangalamatham, Manalikkara. These manuscripts are about two centuries old and are not free from errors. It is not known when and where the author Nilakantha lived, but it is probable that he may be a native of Malabar as this work is widely known in Kerala.

T. Ganapati Sâstrî.

## निवेदना।

**मातङ्गलीला** नाम कश्चिदयं गजलक्षणसंक्षेपरूपो ग्रन्थः। अस्य संशोधनाधारभूता आदर्शास्त्रयः क्रमेण क-ख-ग. चिह्निताः। तत्राद्यौ राजकीयग्रन्थशालास्थौ, तृतीयस्तु **मणलिक्करकल्पकमङ्गलमठस्वामिनः श्रीशङ्करनारायणपोत्ति**महाशयस्य सम्बन्धी। सर्वेऽप्यमी द्विशतवर्षसम्भाव्यास्तालपत्रात्मका अनतिशुद्धाश्च। एषु ख.चिह्नितो द्रमिलग्रन्थलिपिः, अन्यौ केरलीयलिपी। ग्रन्थस्यास्य कर्ता **नलिकण्ठः** कदा कुत्राभिजात इति न निश्चयः। परं त्वसौ ग्रन्थस्य केरलेषु प्रचारात् केरलीयः सम्भाव्यते ॥

त. गणपतिशास्त्री.

श्रीः ॥

श्रीनीलकण्ठकृता

# मातङ्गलीला ।

प्रथमः पटलः ।

नृसिंहयादवौ दैत्यसमूहोग्राटवीदवौ ।
राजमानौ भजे राजराजमङ्गलवासिनौ ॥ १ ॥

मातङ्गवक्रं प्रणिपत्य दृष्ट्वा मातङ्गशास्त्रं मुनिपुङ्गवोक्तम् ।
मातङ्गलीलाचलितान्तरात्मा मातङ्गलीलां रचयामि तावत् ॥ २ ॥

उत्पत्तिः शुभलक्षणान्यशुभलक्ष्मायुर्वयोलक्षणं
मानं मूल्यविशेषसत्त्वमदभेदाश्च क्रमाद् दन्तिनाम् ।
वन्यानां ग्रहणं च रक्षणादिनर्वाचारभेदादिकं
नागाध्यक्षगुणादिकं च सकलं सङ्क्षेपतो वक्ष्यते ॥ ३ ॥

आसीदङ्गाधिराजः सुरपतिसदृशो विश्रुतो रोमपादो
गङ्गातीरे कदाचित् परिजनसहितः सोऽथ चम्पानगर्याम् ।
आसीनो रत्नपीठे विपिनगजकृतं सर्वसस्यादिनाशं
कैश्चिद्विज्ञापितोऽचिन्तयदवनिपतिः किं नु कार्यं मयेति ॥ ४ ॥

कालेऽस्मिन् गौतमो नारदभृगुमृगचर्माग्निवेश्यारिमेदाः
काप्यो मातङ्गचार्यादय ऋषिवृषभा दैवतानां नियोगात् ।

---

१. 'चरित' ख.पाठः.

चम्पां प्राप्ता नृपेणासनकुसुमजलाद्यैः समाराधितास्ते
वन्यान् नागान् ग्रहीतुं प्रददुरथ वरं चादराद‌ङ्गपाय ॥ ५ ॥

राज्ञा तेन गजग्रहाय सचिवा नुन्नाश्चरन्तो वने
तेऽपश्यन् पथि सामगायनमृषिं तिष्ठन्तमप्याश्रमे ।
आराद्वारणयूथमत्र विहरन्तं पालकाप्यं मुनिं
श्रीमन्तं गजयूथगं विरहितं तेनापि सन्ध्यासु तत् ॥६॥

अङ्गेशाय निवेदितं तदखिलं भृत्यैः स गत्वा गजा-
नस्मिन्नाश्रमगे मुनावथ गृहीत्वागत्य चम्पां क्षणात् ।
एतान् गौतमनारदादिमुनिवर्येभ्यो ददौ ते पुनः
स्तम्भे तान् सुदृढं नियम्य सुखमत्रापुस्तथान्ये जनाः ॥ ७ ॥

शुश्रूषाद्यं च कृत्वा मुनिरथ जनकस्याश्रमात् पालकाप्य-
स्तं देशं प्राप्य यत्र स्थितमथ गजयूथं तदस्मिन्नदृष्ट्वा ।
सर्वत्रान्विष्य चम्पां मुनिरथ गतवान् स्नेहतो व्याकुलात्मा
नागानां दुःखितानां व्रणशमनचिकित्सादिरक्षां चकार ॥ ८ ॥

तत्रस्था गौतमाद्या ददृशुरथ मुनिं मौनसम्पन्नमेनं
श्रीमन्तं हस्तियूथस्थितमपि मुनयस्तत्र पप्रच्छुरेनम् ।
कस्मात् तेषां व्रणाँल्लिम्पसि गजनिवहे ते दया केन जाते-
त्येतैः संपृच्छ्यमानो मुनिभिरपि स किञ्चिन्न च प्रत्युवाच ॥ ९ ॥

तद्वृत्तान्तं मुनीन्द्रैर्गदितमथ निशम्याङ्गराजोऽत्र गत्वा
पाद्यार्घ्याद्यैः समाराध्य च मुनिमनु तज्जन्मनामादि सर्वम् ।
पप्रच्छ श्रोतुकामः क्षितिपतिरमुना तापसेनाथ किञ्चि-
न्नोक्तो भूयोऽप्यपृच्छन्मुनिमसुमनघं भक्तिनम्रो नरेन्द्रः ॥ १० ॥

अङ्गेशं पालकाप्यो मुनिरथ परितुष्टोऽब्रवीत् कामचारा
मातङ्गाः कामरूपा दिवि भुवि च यथेष्टं पुरा सञ्चरन्तः ।

प्रालेयाद्रेरुदीच्यां दिशि वटविटपी द्वे शते योजनानां
विस्तारायामयुक्तो भवति गजवरास्ते तु तस्मिन् निपेतुः ॥ ११ ॥
शाखा तैः परिपाटिताश्रमपदे तत्र स्थितस्तापसो
नाम्ना दीर्घतपास्ततः कुपितवान् नागान् शशापाञ्जसा ।
तस्मात् ते खलु कामचाररहिता नागा बभूवुर्गता
मर्त्यानामपि वाहनत्वमथ नो शप्तास्तु दिक्कुञ्जराः ॥ १२ ॥
दिङ्नागाः सह सर्वकुञ्जरकुलैर्गत्वाब्रुवन् पद्मजं
देवास्मत्कुलजन्मनां विधिवशाद् भूमिं गतानामथ ।
रोगाः स्युर्विषमातिभोजनविरुद्धाजीर्णभुक्तादिभिः
प्रोक्तस्तैरतिदुःखितैरिति पुनस्तान् प्रोक्तवान् पद्मभूः ॥ १३ ॥
कश्चिन्नातिचिराद् भविष्यति परं मातङ्गबन्धुर्मुनि-
स्त्वायुर्वेदपरायणोऽतिनिपुणो व्याधीन् हरिष्यत्यसौ ।
इत्युक्ता दिगनेकपाश्च विधिना याता यथास्वं दिशं
दिङ्मातङ्गकुलोद्भवाश्च पृथिवीं याताः परे शापतः ॥ १४ ॥
धात्रा यक्षनरासुरामररुचः संगृह्य वाणीव या
सृष्टा सा रुचिरा कदापि विधिना शप्ताथ दुर्गर्वतः ।
तस्मात् सा वसुकन्यका गुणवती नाम्नाभवद् भार्गवात्
सैषाथाश्रममागता बत मतङ्गस्यातिकौतूहलात् ॥ १५ ॥
शक्रेण प्रहिता त्वियं मम तपोविघ्नाय नैनेति सा
शप्ता[1] प्राप करेणुतां मुनिरथ ज्ञात्वानघां तां क्षणात् ।
भद्रे! हस्तिनि! सामगायनमुनेः शुक्रप्रपानाद् यदा
पुत्रस्ते भविता तदा तव भवेच्छापान्त इत्यब्रवीत् ॥ १६ ॥
यक्षी काचन सामगायनमुनिं स्वप्ने समापैकदा
गत्वाथाश्रमतो बहिर्मुनिवरो मूत्रं चकाराञ्जसा ।

१. 'वासुकिक' ग. पाठः.

मूत्रेणेन्द्रियमस्रवत् तदपिबद् गेहं प्रविष्टे मुनौ
शीघ्रं गर्भमधत्त सा च करिणी सूते स्म पुत्रं मुखात् ॥ १७ ॥

दत्वा तं मुनये मुदा निजसुतं सन्त्यज्य सा हस्तिनी-
भावं चाथ दिवं जगाम सहसा शापाद् विमुक्ता सुखम् ।
प्रीतोऽसावथ सामगायनमुनिस्तज्जातकर्मादिकं
कृत्वाख्यामपि पालकाप्य इति दिव्योक्त्या चकारास्य च ॥ १८ ॥

सोऽक्रीडच्च गजैः करेणुकलभैः साकं नदीनिर्झर-
प्रस्थेष्वप्सु च रम्यभूमिषु चरन् पर्णाम्बुभोजी मुनिः ।
अब्दानत्र तु षट्सहस्रयुगलीसङ्ख्यानमीषामसौ
भक्ष्याभक्ष्यसुखासुखेङ्गितहितानिष्टादि सर्वं विदन् ॥ १९ ॥

मामङ्गाधिप ! सामगायनसुतं तं पालकाप्यं मुनिं
विद्धीत्यङ्गनृपोऽमुना मुनिवरेणोक्तः परं विस्मितः ।
सम्पृष्टोऽथ मुनिर्गजार्थममुना राज्ञा पुनस्तं नृपं
नागोत्पत्तिशुभादिलक्षणचिकित्साद्यं क्रमादब्रवीत् ॥ २० ॥

धर्मात्मिका सृष्टिरनेकपानां हिताय यज्ञस्य च दैवतानाम् ।
विशेषतो राजहिताय तस्माद् यत्नेन नागाः खलु रक्षणीयाः ॥ २१ ॥

मार्ताण्डस्य यतोऽण्डतो जनिरभूद् ब्रह्मर्षिभिर्दर्शितं
सन्दीप्तं किल तत्कपालयुगलं पाणिद्वयेनादरात् ।
सप्तागायदजः प्रगृह्य युगपत् सामान्यथैरावतो[1]
नागोऽभूदथ सप्त वारणवरा जाताः पृथग् गानतः ॥ २२ ॥

जाता दक्षिणहस्तसंस्थितकपालादेवमष्टौ गजा
वामस्थाच्च वशाः क्रमेण जनिता जायाश्च तेषामथ ।

---

१. सामगानजन्यत्वादेव गजानां सामजत्वम्.

पुत्राः सत्त्वबलान्विताश्च बहवः पौत्रादयोऽपि क्रमात्
स्वैरं चेरुरशेषलोकवनधुन्यद्रिष्वमी वारणाः ॥ २३ ॥

इन्द्राग्न्यादिदिगीशवाहनतया देवासुरायोधने
याता नागवराश्च दुद्रुवुरथो भीता विरिञ्चान्तिके ।
तद् ज्ञात्वा मदपूरुषोऽथ विधिना सृष्टस्तदावेशिता
मत्ता दैत्यचमूं निहत्य ययुरिन्द्राद्यैर्यथास्वं दिशम् ॥ २४ ॥

दुर्वासाः प्रददावमर्त्यपतये दिव्यस्रजं सादरं
तामैरावतमर्दितामपदयं दृष्ट्वा मुनिः शप्तवान् ।
तच्छापेन विनष्टमाप्तुमखिलं चैश्वर्यमुन्मथ्यमा-
नेऽब्धावभ्रमुवल्लभोऽजनि ततः क्षीराब्धिजोऽसौ श्रुतः ॥ २५ ॥

जाता भद्रद्विपेन्द्राः कृतयुगसमये लक्षणेनाभियुक्ता-
स्त्रेतायां मन्दजात्याः खलु गजपतयो द्वापराख्ये युगे च ।
नागाश्चैते मृगाख्यास्तदनु कलियुगेऽत्रैव सङ्कीर्णजात्या
नागानां जातिभेदाज्जनिरिह कथिता कालयोगानुरूपा ॥ २६ ॥

नातिस्थूलाखिलाङ्गः प्रथमयुगवसन्तोद्भवः पाटलाभो
नाहायामी सहिष्णुर्धरणिधरचरः सार्थिकोऽन्वर्थवेदी ।
धीरस्तेजस्व्युदग्रो जलधरनिनदः काङ्क्षितो धेनुकाभिः
शूरः पिङ्गाक्षिदन्तो भवति च समदोषः शुभो भद्रनामा ॥ २७ ॥

त्रेतायां शीतकालोद्भव उभयचरो दुर्मना ह्रस्वकर्णो
नायामी मन्दगामी हरिशचिनयनस्तामसः कृष्णशोभः ।
नागः श्लेष्मप्रधानो नतविपुलरदः स्थूलवृत्ताङ्गशोभी
कामी गम्भीरवेदी कथित इति बुधैर्मन्दनामा गजेन्द्रः ॥ २८ ॥

नाहायामप्रहीणः कृशनिखिलतनुर्धूसरच्छायकायो
बह्वाश्युत्तानवेदी चपलमतिरतिक्रोधनः सिन्धुचारी ।

स्थूलाक्षो ह्रस्ववालश्चरमयुगपयोवाहकालप्रजात-
श्चण्डः पित्तप्रधानो मृग इति कथितो वारणोऽसौ कनीयान् ॥
प्रत्येकं मन्दजात्यादिप्रोक्तलक्षणसङ्करात् ।
सङ्कीर्णजात्या मातङ्गाः कलौ ते बहुला युगे ॥ ३० ॥

नागाः सर्वत्र गत्या गज इति विजयाद् गर्जनाच्चैव हस्ती
वेधोहस्तप्रसूत्या परनृपतिचमूवारणाद् वारणोऽपि ।
मातङ्गो वर्त्ममृत्त्वादतिजरयाति कुं कुञ्जरः पादतोदात्
पद्मी पद्मप्रसक्त्या द्विप इति मुखतो हस्ततोऽपि प्रपानात् ॥ ३१ ॥

शुण्डावालधिदन्तैश्च चतुर्भिश्च पदैरपि ।
प्रहरन्ति यतस्तस्मादष्टप्रहरणा द्विपाः ॥ ३२ ॥
इमे बिभ्यति सर्वेभ्यः सर्वेभ्योऽभ्यधिकं वपुः ।
कान्तत्वाच्च तथा प्राहुरिभानेतान् महर्षयः ॥ ३३ ॥

प्रशस्तकरसंयोगात् करिणो दन्तिनस्तथा ।
सिन्धुराः सिन्धुरमणादेवं निर्वचनक्रमः ॥ ३४ ॥

जिह्वायाः परिवृत्तिरन्तरधिकं दाहोऽनलाद् ब्रह्मणो
मुष्काभावरजोम्बुपङ्कविहृती स्वस्थेमसम्मोहनम् ।
मर्त्यानां वहनं च दीर्घतपसो देवत्वहानिर्भृगो-
र्विण्मूत्रेऽभिरतिः स्वके वरुणतोऽन्तस्स्वेदता शापतः ॥ ३५ ॥

स्वांशो दत्तो न देवैर्हविष इति हुताशः कदाचित् तिरोभूत्
क्रुद्धोऽन्वेष्टुं प्रणुन्ना दिगधिपकरिणो ब्रह्मणा वह्निमेनम् ।
गत्वा ते त्वाश्रयाशाश्रममथ महिषीं धर्षयामासुरग्नेः
सोऽयं तत्क्रन्दनात् तानशपदलमिमांस्तत्प्रभावान्न दग्धुम् ॥

पूर्वं यूयं विधातुर्वचननिशमनात् सर्वमेवं प्रकुर्मः
कर्मेत्यस्याग्रतो द्रागवदत यदतीवोद्धता हन्त तस्मात् ।

जिह्वाया वोऽस्तु नित्यं परिगतिरपि दाहोऽन्तरित्यग्निशापं
प्राप्तानां पद्मजन्मा सदयमथ ददौ पांसुपङ्काम्बुसौख्यम् ॥ ३७ ॥

गत्वा नागा भृगोराश्रममवनिरुहोत्पाटनं चाग्निहोत्रे
विण्मूत्राण्यत्र चक्रुस्तदनु मुनिवरेणात्तरोषेण तूर्णम् ।
आघ्रायात्मीयमूत्रं शकृदपि च निजं तालुसङ्घर्षणं चा-
प्यातन्वन्तो भवन्त्वित्युरुतरतपसा तेन शप्ताः कदाचित् ॥ ३८ ॥

युद्धे दैवासुरे प्राग् रणशिरसि गजस्वेदपीडासहिष्णुं
देवौघं प्रेक्ष्य पाशी द्रुतमथ करिणां स्वेदमन्तर्व्यतानीत् ।
तस्मादन्तः प्रवृत्तान् विजहति करतः स्वेदबिन्दून् करीन्द्रा
मुष्काभावस्त्वजोक्त्या द्रुततरगतये स्वैरमायोधनादौ ॥ ३९ ॥

सर्वेषां मदकृद् वसन्तसमयः प्रोक्तो विशेषादसौ
नागानां तु ततो वसन्तजनिता ये ते तु गन्धद्विपाः ।
तेषां स्वेदपुरीषमूत्रमदतोयाघ्राणनादञ्जसा
माद्यन्त्यन्यगजाश्च ते जयकरा गन्धाद्विपा भूभुजाम् ॥ ४० ॥

इति मातङ्गलीलायां
नागोत्पत्त्यधिकारः प्रथमः पटलः ।

---

## अथ द्वितीयः पटलः ।

मस्तकद्वितयं दन्तावासनं वंश एव च ।
षडेते प्रोन्नता यस्य स गजो राजवाहनः ॥ १ ॥

पुष्करद्वितयं कोशो जिह्वोष्ठगुदतालु च ।
सप्तैते रक्ततनवो यस्य स द्विरदोत्तमः ॥ २ ॥

विंशत्या नखसङ्ख्ययाञ्चितपदः स्फारोन्नतिः कुम्भयो-
रच्छिद्राञ्चलरक्तकर्णयुगलः सुश्लक्ष्णकक्षः करी ।
सव्याभ्युन्नतमाक्षिकद्युतिरदः सम्पूर्णकुक्षिः क्रम-
स्थूलज्व्यायतचारुवालधिकरः पूगीफलश्यामलः ॥ ३ ॥

स्निग्धश्यामतनुश्च खड्गसदृशच्छायोऽथवा स्वस्तिक-
श्रीवत्सारिदराब्जलाञ्छनलसद्बिन्दुप्रकाशारुणः ।
क्रोडोद्यज्जघनस्थलोऽथ दृढकुक्षिस्त्रस्तसत्पिण्डिको
विस्तीर्णाधिकमांसलोन्नतकलाभागो नृपार्हो गजः ॥ ४ ॥

बृहदायतवृत्तकन्धराः सजलाम्भोदनिनादबृंहिताः ।
कलविङ्कमधुप्रभेक्षणास्त्रिवलिस्कन्धकरा गजाः शुभाः ॥ ५ ॥

सुस्निग्धतारनयनारुणपुष्कराश्च
चूतप्रवालरुचिकोमलकोशदण्डाः ।
रक्तारविन्दरुचिराः कलकण्ठनादा-
स्त्वेते गजाः शुभकराः खलु पार्थिवानाम् ॥ ६ ॥

तुङ्गदक्षिणविषाणकोटयो विन्दुचित्रितमहाकराननाः ।
गूढसन्धिदृढगात्रपश्चिमाः पार्थिवेन्द्र ! तव वाहनोचिताः ॥ ७ ॥

चापोन्नतायतनिगूढसुवंशपृष्ठाः
कान्ताघनस्तनसमानसरोमकुम्भाः ।
विस्तीर्णकर्णहनुनाभिललाटगुह्या-
स्ताम्रोष्ठतालुरदनाः करिणो नृपार्हाः ॥ ८ ॥

---

१. "स्नायुभिश्च प्रतिच्छन्नान् सन्ततांश्च जरायुणा । श्लेष्मणा वेष्टितांश्चापि कलाभागांस्तु तान् विदुः ॥ धात्वाशयान्तरे धातोर्यः क्लेदस्त्वाधितिष्ठति । देहोष्मणाभिपक्वश्च सा कलेत्यभिधीयते" ॥ इति भावप्रकाशः .

सिन्दूरसान्द्रसमबिन्दुविचित्रिताङ्गः
कूर्मोन्नतैर्द्विनवविंशतिभिर्नखैर्वा ।
चन्द्रप्रभैश्च सहितो बलसत्त्वधैर्यै-
रुद्गारसौरभयुतोऽपि करी नृपार्हः ॥ ९ ॥

भग्नव्यालजलातुरांश्च कलभान् हित्वा प्रतापान्वितः
कर्मण्योऽष्टविधप्रहारकुशलः शूरो दृढो वेगवान् ।
सर्वप्राणिवधे समुद्यतमनाः सद्भिर्युतो लक्षणै-
र्यो दन्तावलपुङ्गवः स नृपतेः संग्रामयोग्यो भवेत् ॥ १० ॥

युध्यन्ति केवलं योधा वहन्त्येव हया रथान् ।
वारणास्तु नरेन्द्रार्हा युध्यन्ति च वहन्ति च ॥ ११ ॥

सारङ्गसिंहशुकवानरमल्लहंस-
कादम्बकैरपि गतिः सदृशी शुभा स्यात् ।
गन्धर्वकिन्नरसुपर्णकसूकरैश्च
शार्दूलराजशरभोरगचक्रवाकैः ॥ १२ ॥

जिह्वामूलसमुद्भवं निगदितं फेनायितं स्याद् रुतं
तत् पोतायितमोष्ठतालुजनितं तत् कण्ठजं गर्जितम् ।
तत् प्रोक्तं हसितं कपोलकरजं सर्वं तदेतच्छुभं
क्षुत्तृट्छोकभयोद्भवं निगदितं निन्द्यं भृशं दन्तिनाम् ॥ १३ ॥

गम्भीरसौम्यहृष्टाः स्वस्थाः शृङ्गारिणस्तथा स्निग्धाः ।
नादाः शुभा नराधिप! षडेव कथिता गजेन्द्राणाम् ॥ १४ ॥

हस्तेन मृदङ्गरवं कर्णाभ्यां दुन्दुभिस्वनं चैव ।
दर्दुररवं मुखेन च करोति यः पूजितः स गजराजः ॥ १५ ॥

हंससारसमयूरकोकिलव्याघ्रसिंहवृषसन्निभस्वराः ।
पूजिताः करभकाकजम्बुकक्रोडवानरसमा न शोभनाः ॥ १६ ॥

गुणग्रामसमग्राश्चेद्धीनाधिकनखा गजाः ।
दोषानेव प्रकुर्वन्ति विपरीताश्च शोभनम्[1] ॥ १७ ॥

इति मातङ्गलीलायां
शुभलक्षणाधिकारो द्वितीयः पटलः ।

---

अथ तृतीयः पटलः ।

हीनाधिक्यनखाङ्गदृश्यवृषणो ह्रस्वाङ्गुलिर्वामनो
मण्डूकोदरकुब्जनीलशबलश्यावाभतालुस्तथा ।
स्थूलश्चातितनुर्जलूकसदृशश्चातुल्यपार्श्वद्वयो
रूक्षो निर्मदनीचपुष्करकरः पूज्यो न चायं गजः ॥ १ ॥

राजिग्रन्थियुतातिरूक्षशबलस्थूले विषाणे किला-
स्यस्निग्धासमशुभ्रबिन्दुमदतिह्रस्वः सिराभिस्ततः ।
मेढ्रो यस्य कृशोऽतिवक्रविपुलव्याविद्धसग्रन्थिक-
ह्रस्वो वालधिरल्पपेचककलापृष्ठः स निन्द्यो गजः ॥ २ ॥

लक्ष्यमुष्कस्तु मातङ्गो यत्र तिष्ठति पार्थिव! ।
हन्यते तत्र नृपतिः सुतेन सुहृदार्थे[2] वा ॥ ३ ॥
कर्णहीनो दक्षिणतश्चातुर्वर्ण्यविनाशनः ।
वामतः शिल्पिनो हन्याद् रोगार्तोऽपि भवेन्नृपः ॥ ४ ॥

त्वग्दन्ततालुनखरादिषु पुष्पितो य-
स्त्याज्योऽत्र तद्दहनलेखनकर्म यद्वा ।
तच्छान्तिकर्म सकलं प्रतिसारणं च
तच्छेदनं च मतिमान् विधिवत् प्रकुर्यात् ॥ ५ ॥

---

१. 'नाः' ग-पाठः. २. 'सह' ग-पाठः.

हृष्टोऽत्यर्थं रजन्यां भ्रमति खलु दिवा प्राक् प्रहृष्टः शकुन्तैः
कूजन् वाञ्छन् वियत्युत्पतितुमपि सदा वालदण्डेन वीजन् ।
गात्रोत्कर्षी च बाढं मुहुरपि न वशे वर्तते यश्च यन्तु-
स्तं विद्याद् व्यालहस्तीत्यखिलगुणगणाढ्योऽपि न ग्राह्य एषः ॥ ६ ॥

पोतान्विता वा करिणी सगर्भा
लब्धा भवेद् वाहनकोशनाशः ।
तपोवने वा स्ववनेऽथ वापि
नीत्वार्पयेद् दिग्गजदेवपूजाम् ॥ ७ ॥

इति मातङ्गलीलायाम्
अशुभलक्षणाधिकारस्तृतीयः पटलः ।

## अथ चतुर्थः पटलः ।

स्निग्धदन्तनखरोमचक्षुषो दीर्घकर्णकरवालवंशिनः ।
प्राक्प्रदेशपरिपूर्णलक्षणास्तुल्यमस्तकतलाश्चिरायुषः ॥ १ ॥

सप्तरक्ततनवः षडुन्नताः सुप्रभावमनसः सुगन्धयः ।
नीलनीरदनिभा विराविणो छिन्नरोमनिलयाश्चिरायुषः ॥ २ ॥

गात्रोत्तमाङ्गनयनाननकर्णकण्ठ-
वक्षोविषाणकरसत्त्वरुचोऽपराणि ।
अङ्गानि चेति सदृशानि वयोदशाभिः
क्षेत्राण्यमूनि करिणां दश च द्वयं च ॥ ३ ॥

क्षेत्राणां यावतां पूर्णं लक्षणं यस्य दृश्यते ।
दशास्तावत्य एवायुस्तस्येत्याह बृहस्पतिः ॥ ४ ॥

त्रीणि पञ्च च सप्ताष्टौ लिङ्गान्येतानि यस्य वै ।
आयुः स लभते तावद्दीर्घमित्यस्य मे मतिः ॥ ५ ॥

चतुर्थी मृगजात्यस्य मन्दजात्यस्य चाष्टमी ।
द्वादशी भद्रजात्यस्य परमायुरिहोच्यते ॥ ६ ॥

इति मातङ्गलीलायाम्

आयुर्लक्षणाधिकारश्चतुर्थः पटलः ।

——o——

अथ पञ्चमः पटलः ।

आ द्वादशाब्दाद् वयसा जघन्यो
मध्यश्चतुर्विंशतिवत्सरात् प्राक् ।
आ षष्टिसंवत्सरतः पुरायं
मातङ्गवर्यो वयसोत्तमाख्यः ॥ १ ॥

श्लक्ष्णः सुताम्रो मृदुगात्ररोमा
निद्रालुरङ्कूरितहस्तलक्ष्यः ।
अव्यक्तरूपाङ्गयुतः स्तनार्थी
बालाह्वयोऽयं प्रथमे तु वर्षे ॥ २ ॥

किञ्चित्सान्द्रनखोऽतिरागरसनोष्ठादिः पयोऽल्पं पिबन्
किञ्चिद्वल्लितृणादि खादितुमना गात्रान्तरे लोहितः ।
द्राग् धावत्यनिमित्तमेव मुदितः प्रायः सितामीलितो
नम्राक्षो नयनप्रमोदकृदयं वर्षद्वये पुच्चुकः ॥ ३ ॥

१. 'णानि खा' ख. पाठः.

स्फुटनखविदुसन्धिश्रोत्रदन्तप्रवेष्ट-
च्छविरुरसि सबिन्दुः कर्णे*पिञ्छूषयोश्च ।
श्रवसि शिरसि केश्युन्नम्रशीर्षस्तृणादी
दृढतररदपङ्क्तिश्चोपसर्पेस्तृतीये ॥ ४ ॥

‡विलागनिष्कोशविलोहितः पयो-
द्विट् प्रोहसन्दानघनस्तृणप्रियः ।
कृष्णान्ततालुः पृथुलश्चतुष्टये
मनाक् प्ररोहद्दशनो हि बर्बरः ॥ ५ ॥

काष्ठत्वक्तनुसेवनस्तनुकचः पङ्काम्बुपांसुप्रियः
स्वल्पं हृष्यति कोपमेति च सुखं दुःखं यतं बुध्यते ।
शब्दादीनपि वेत्ति यन्तृवशगो ह्युत्तानवित् प्रोल्लस-
द्वाटावग्रहदन्त एष कलभः प्राप्तः समां पञ्चमीम् ॥ ६ ॥

पिञ्छूषकर्णकटसृक्कविलागनेत्र-
कूटाग्रकर्णयुगलप्रतिमानदेशे ।
यः सान्द्रबिन्दुसुभगो वलिहीनवर्ष्मा
नैकारिकं तमिह षट्सममामनन्ति ॥ ७ ॥

घननखतलसन्धिप्रोहसन्दानचिक्का-
पलिकरनखशीर्षो दन्तखादी सकण्डूः ।
स्फुटचरणजवावस्कारवान् सप्तवर्षः
शिशुरिति कथितोऽसौ स्निग्धदोःपुष्कराग्रः ॥ ८ ॥

---

* 'पिञ्छूषा कर्णपाली स्याद्' इति षष्ठे पटले वक्ष्यते.

‡ विलागादिपदानामर्थः षष्ठे पटले स्पष्टः । 'मध्येमुखं तु वाहित्थं पिलाटौ तस्य पार्श्वयोः' इति विलागशब्दार्थे पिलटशब्द एव वैजयन्त्यां पठ्यते.

घननखतलसन्धिः क्षिप्ररोहिव्रणौघो
मृदुमृदुयवसाशी सञ्चलद्दन्तपङ्क्तिः ।
चपलगतिरजस्रं वर्षघर्षी प्रहर्षी
प्रहरणमृदुकोऽसावष्टमे मज्जनाख्यः ॥ ९ ॥

शुक्लेक्षणः प्लवति धेनुममुक्तशुक्लः
स्निग्धच्छविः प्रततदन्तचयः पृथूराः ।
यो रन्ध्रसन्धिषु घनः सुदृढप्रहारी
दन्तारुणं नवसमाप्रभवं वदन्ति ॥ १० ॥

सञ्जातशुक्लः प्लवने स्थिराङ्गः प्रहृष्टमेढ्रः स्थिरजातदन्तः ।
तेजोबलाढ्यो दशमे सुखादी यूथप्रहर्षी च स एव विक्कः ॥ ११ ॥

उत्साही स्फुटगात्रसन्धिसुभगो गर्भप्रदो दुःखभाक्
सप्रोहादिवलिर्घनप्रहरणः पीताभदन्तच्छविः ।
दुर्गस्थानरतः सुवृत्तजघनावस्कारकर्णाञ्चलः
पोताख्यः स्मरवेगविक्रमबली यातो द्वितीयां दशाम् ॥ १२ ॥

तत्तन्मानविभक्तकर्णरसनोत्सङ्गादिरुद्यन्मद-
घ्राणः सर्वगुणान्वितो दृढरणः सुस्निग्धरोमच्छविः ।
क्षीबाक्षः प्रियदर्शनोऽक्षविलसद्धृद्धिः सुधीः कोपनो
हन्ता धातुसमः स एव जवनो यातस्तृतीयां दशाम् ॥ १३ ॥

सन्दानादिषु जातसुस्थिरवलिर्गृह्णाति युक्तं मदं
निद्राद्विट् प्रतिदन्तिवैरिमनसा भीतोऽनले धूपनात् ।
गर्जन्नुद्धतगात्ररोमनिचयो युद्धप्रयोगप्रियः
कल्याणो ह्ययमेव वारणयुवा प्राप्तश्चतुर्थीं दशाम् ॥ १४ ॥

---

१. 'लिवि' ख.पाठः.

सन्दानप्रभृतिप्रदेशविलसद्दानाविलोद्यद्वली-
सान्द्रः कर्णकट†क्षयेषु सहजामायाति च श्रेष्ठताम् ।
द्राङ् माद्यत्यनिमित्तमेव मुदितः शूरोऽतिसर्वंसहो
यौधो नाम सदा मदाविलकटः प्राप्तो दशां पञ्चमीम् ॥ १५ ॥

ऊर्ध्वं विनिर्भिण्णवलिप्रदेशः किञ्चिद्विहीनेन्द्रियधातुतेजाः ।
वेष्टोष्ठकर्णादिषु जातरोमा षष्ठीं गतो निस्सृतदन्तमूलः ॥ १६ ॥

अल्पाग्निपित्तो बहुमातरिश्वा
स्तब्धाङ्गयुक्तः परुषच्छविश्च ।
अल्पाङ्गचेष्टोऽतिकफो विवर्णः
प्राप्तो दशां सोऽप्यथ सप्तमीं वै ॥ १७ ॥

नित्याश्रुः सततं कटस्रुतकफो दुर्वर्णरूक्षच्छवि-
र्भीत्या यूथबहिश्चरः स्मरधिया दन्ताभिवृद्ध्योज्झितः ।
निर्वीर्यः सततं पिनद्धनयनो न क्षिप्ररोहिव्रणो
ह्यष्टम्यां छविरप्यपोहति भृशं सम्भिन्नरोमावलिः ॥ १८ ॥

स्रस्तग्रीवः प्रचलदशनो मन्दसर्वाङ्गचेष्टो
दन्तस्रावी मृदुयवसभुग् निर्मदो निस्सपत्नः ।
रूक्षच्छायो वलिततनुर्यूथपृष्ठानुगामी
विश्लिष्टाङ्गः स्वपिति (*च तरां ?)यो नवम्यां पुराणः ॥ १९ ॥

विस्रस्तश्रवणांसवालधिकरः शीर्णाङ्गरोमा चल-
द्दन्तो मांसबलक्षयी चलतलः प्रस्रस्तपादोऽल्पभुक् ।
रूक्षाङ्गः पटली सिराचिततनुः कृच्छ्राच्छकृन्मूत्रमुक्
तृष्णालुः कृमिजालभक्षितनखो वृद्धो दशम्याश्रितः ॥ २० ॥

---

† क्षयो गजजानुभागविशेषः.  * 'नितराम्' इति स्यात्.

शेते द्रुमे नाप्सु कफात्त$लण्डः संकोचमेही मृदुखादनश्च ।
अवाग्विषाणः स्थिरगात्ररोगी दशान्विते वर्षशतेऽपि नागः ॥२१॥

नीचैश्च मन्दं प्रमृशंश्च यायाच्चलत्करोऽधश्चलकर्णवालः ।
प्रस्तब्धगात्रापरवानजस्रं स द्वादशीं प्राप्य दशां स्वपेच्च ॥ २२ ॥

एवं वर्षशतं विंशमवस्थाय महीपते! ।
कृत्वा बहुविधं कर्म स्वर्गं गच्छति वारणः ॥ २३ ॥

इति मातङ्गलीलायां
वयोलक्षणाधिकारः पञ्चमः पटलः ।

---

अथ षष्ठः पटलः ।

नेत्रादापेचकं दैर्घ्यं नखादास्कन्धमुच्छ्रयः ।
परीणाहः प्रमातव्यः कक्ष्यास्थानेषु दन्तिनाम् ॥ १ ॥

सञ्जातमात्रमृगजात्यगजस्य दैर्घ्यं
साधैकहस्तमिह चैककरोच्छ्रयः स्यात् ।

नाहो द्विहस्त इति च प्रतिवर्षमेषां
पञ्चाङ्गुलार्धैरुदिता दशवत्सरान्तम् ॥ २ ॥

पञ्चोन्नतिः सप्त मृगस्य दैर्घ्यं नाहप्रमाणं तु वितस्तयोऽष्टौ ।
एतद्विवृद्धावथ मन्दभद्रौ प्राप्ते तु वर्षे दशमे त्रियुक्ते ॥ ३ ॥

षट्पञ्चचतुरुच्छ्राया अष्टसप्तषडायताः ।
नवाष्टसप्तनाहाश्च मुख्यमध्याधमा वशाः ॥ ४ ॥

---

$ लण्डो विष्ठा.

अतिस्थूलाः कृशाश्चैव हीनाङ्गाश्चैव ये गजाः ।
तेषामङ्गान्यमेयानि प्रत्यङ्गानि च पार्थिव! ॥ ५ ॥

समसर्वाङ्गदेहस्य वारणस्य महीपते! ।
प्रमाणमिष्टं सर्वत्र कल्याणस्य विशेषतः ॥ ६ ॥

शिरसः पिण्डौ कुम्भौ भवतो विदुसंज्ञ एतयोर्मध्यः ।
तस्याधोऽवग्रह इति वाहित्थं कुम्भयोरधोभागः ॥ ७ ॥

तस्याधः प्रतिमानं तन्मध्यो वायुकुम्भसंज्ञः स्यात् ।
वाहित्थपार्श्वयुगलं विलागसंज्ञं भवेद् गजानां तु ॥ ८ ॥

पुष्करोपरि गण्डूष ईषिका त्वक्षिकूटकम् ।
अपाङ्गदेशो निर्याणं कर्णमूलं तु चूलिका ॥ ९ ॥

पिञ्छूषा कर्णपाली स्यात् प्रोहाख्योऽन्तरमंसयोः ।
हस्तोपरि त्ववस्कारस्तदूर्ध्वं पलिसंज्ञकम् ॥ १० ॥

देहमध्यं तु निगलस्थानं चिक्का तदूर्ध्वतः ।
सन्दानं जघनादूर्ध्वं कालभागस्त्वधोऽस्य च ॥ ११ ॥

पक्षाधोऽप्यपरौ ज्ञेयौ निष्कोशः पक्षपृष्ठयोः ।
कुक्षिः पश्चात् तयोस्ताभ्याम् (?)उत्कृष्टाविति संज्ञितौ ॥

पुच्छमूलसमीपं स्यात् पेचकं तु गलादधः ।
उरस्यन्तर्मणिं विद्याद् ग्रीवासन्धिसमाश्रितम् ॥ १३ ॥

इति मातङ्गलीलायां

मानिर्णयाधिकारः षष्ठः पटलः ।



अथ सप्तमः पटलः ।

एतावन्मूल्यमेषामलमिति गदितुं नो समर्था मनुष्याः
क्रेतुर्विक्रेतुरेकं यदिह बहुमतं तद्विदुर्मुख्यमूल्यम् ।
एकस्यासम्मतं मध्यममनभिमतं चोभयोर्निन्द्यमस्मात्
तद्ज्ञैः सर्वं विदित्वा बहुभिरवहितैर्मूल्यमूह्यं गजानाम् ॥ १ ॥
गृह्णीयात् पूर्णमूल्येन तु निखिलगुणैरन्वितं वारणेन्द्रं
भग्नैकाक्ष्यङ्घ्रिदन्तं बधिरमपि रुजावन्तमप्यर्धमूल्यात् ।
छिन्नार्धश्रोत्रवालादिकमपि मतिमांस्तत्र मूल्यत्रिभागाद्
दन्तद्वन्द्वप्रहीणादिकमिभवरमप्यङ्घ्रिमूल्येन गृह्यात् ॥ २ ॥
वामदन्तोन्नतं विद्यादपाकीलं[1] तु मूल्यतः ।
अष्टांशहीनतो विद्याद्दशा मूल्यत्रिभागतः ॥ ३ ॥

इति मातङ्गलीलायां
मूल्यविशेषाधिकारः सप्तमः पटलः ।

---

अथाष्टमः पटलः ।

देवदानवगन्धर्वयक्षराक्षसमानुषान् ।
पिशाचोरगसत्त्वांश्च लक्षयेत् स्वरवलक्षणैः ॥ १ ॥
यः कान्तिमान् कुमुदचन्दनसप्तपर्ण-
नारङ्गपद्म*चतुरङ्गुलतुल्यगन्धः ।
फुल्लाननः कलभकौतुकवानजस्रं
मान्योऽन्यपुष्टनिनदः स तु देवसत्त्वः ॥ २ ॥

---

१. 'द् द्विपं हीनं' ग-पाटः.

---

* चतुरङ्गुलः शम्याकः.

निन्द्योद्यतो युद्धरतोऽतिमात्रं क्षुद्रस्वभावो न मनाग् दयालुः।
स सिन्दुवारागुरुमत्स्यगन्धी हन्ता करी दानवसत्त्व एषः ॥ ३ ॥

गन्धर्वमाहुरतिमुक्तकयूथिकाब्ज-
पुन्नागनागहरिचन्दनतुल्यगन्धम्।
गानाप्रियं शुभगतिं शुभदन्तनेत्र-
कुम्भोत्तमाङ्गकरपुष्करमल्पबिन्दुम् ॥ ४ ॥

शुचिरक्षान्तशीलश्च सुभगः प्रियदर्शनः।
तेजस्वी हृष्टकर्णश्च यक्षसत्त्वो मतङ्गजः ॥ ५ ॥

यः काकवानरखरोष्ट्रबिलाळमूत्र-
विट्पूतिगन्धिरिभहा निशि दारुणश्च।
इष्टाम्लमांसरुधिरोऽविनयी कृतघ्नः
सत्त्वेन राक्षस इति प्रतिकूलकारी ॥ ६ ॥

शून्यप्रियः कुणपलोहसमानगन्धो
भ्रान्तो निशासु विचरन् घनानिस्वनश्च।
पर्वस्वतीव परिकुप्यति यश्च मूढ-
स्तं सूरयो गजमुशन्ति पिशाचसत्त्वम् ॥ ७ ॥

यो मत्स्यशैवल*फणिर्जककर्दमानां
गन्धैः सुरापिशितयोरपि तुल्यगन्धः।
त्रस्तो भवेज्जलदशब्दमपि प्रशृण्वन्
क्रुद्धो निशासु जलपांसुरतो भुजङ्गः ॥ ८ ॥

---

१. 'नागप्रि' क. पाठः.

---

*फणिर्जकस्तुलसीभेदः.

विप्रः शुचिर्मधुपयःपरमान्नसार्पि-
　　श्चूतप्रसूनसमगन्धसुगन्धिताङ्गः ।
सामप्रियः सकलनागहितश्च शान्तः
　　स्नानप्रियः शुभमतिर्गदितो मुनीन्द्रैः ॥ ९ ॥

यश्चन्दनाज्यहरितालमनःशिलानां
　　गन्धेन तुल्य इह गुग्गुलुकस्य चापि ।
सन्नाह्यकर्मकुशलो युधि निर्भयश्च
　　स क्षत्रियो विविधशस्त्रनिपातशूरः ॥ १० ॥

बन्धूकशालितिलकैतकमालतीनां
　　गन्धेन यश्च समलङ्कृतताल्लुजिह्वः ।
क्लेशक्षमः पिशितभुक् प्रियसान्त्वनश्च
　　क्रुद्धोऽपि तूर्णमुपशाम्यति वैश्यजातिः ॥ ११ ॥

उच्छिष्टहृष्टः सहसैव भीरुः
　　शुक्ताम्लबस्तास्थिकुळीरगन्धः ।
क्रोधी च भेद्यः कृपणः कृतघ्नः
　　सत्त्वेन शूद्रः स गजाधमश्च ॥ १२ ॥

विश्वासघातकः क्रूरो गमने कुटिलक्रमः ।
न भुङ्क्ते समदोऽत्यर्थं सर्पसत्त्वः करी मतः ॥ १३ ॥

देवक्षत्रियगन्धर्वविप्रसत्त्वास्तु सात्त्विकाः ।
राजसौ वैश्यशूद्रौ तु तामसाश्च तथापरे ॥ १४ ॥

नागानां हरिपीतकालधवला वर्णाश्चतुर्धा क्रमाद्
　　रक्तात् पित्तयुताद् *बलाससहिताद्रक्ताच्च पित्तात् कफात् ।
सञ्जाताः खलु बर्हहेमजलदज्योत्स्नासमास्तेष्वसौ
　　कालस्त्वेक इहावनौ भवति ते शेषास्त्रयः स्वःस्थले ॥ १५ ॥

---

* बलासः कफधातुः.

छाया पञ्चविधा यथा दिनमणिं कादम्बिनी छादयेद्
देहस्थं द्विरदस्य लक्ष्म च तथा सा भूतभेदाद् भवेत् ।
आद्या नीरधराकृतिर्धरणिजा नैका सुवर्णाग्निजा
तिस्रः पूज्यतमा इमास्तदितरे रूक्षे परं निन्दिते ॥ १६ ॥
गन्धर्वोरगयक्षसत्त्वकरिणः सान्नाहिकाः[1] क्षत्रियः
सान्नाह्ये तु विशेषतो द्विजसुरा यागादिकर्मादिषु ।
योज्याः कर्मसु वैश्यजातिरखिलेष्वन्ये च युद्धे वधे
भाण्डादेर्वहने च चौरहनने व्याघ्रादिविध्वंसने ॥ १७ ॥

अत्यर्थोत्तानगम्भीरान्वर्थप्रत्यर्थकर्कशैः ।
सिद्धेनापि च नागानां वेदनं सप्तधा विदुः ॥ १८ ॥
प्राजनाङ्कुशदण्डेभ्यो दूरादुद्विजते हि यः ।
स्पृष्टो वा व्यथतेऽत्यर्थं स गजोऽत्यर्थवेदनः ॥ १९ ॥
त्वचः संसर्गमात्रेण रोम्णां स्पर्शेन वा पुनः ।
तीक्ष्णतोत्राङ्कुशन्यासं वेत्ति सोत्तानवेदनः ॥ २० ॥
त्वग्भेदाच्छोणितस्रावादामांसव्यथनादपि ।
यो न वेत्त्यङ्कुशाघातं स वै गम्भीरवेदनः ॥ २१ ॥
यतयाते वेदयते न बिभेति न मुह्यति ।
यो गजस्तं विजानीयात् प्राज्ञस्त्वन्वर्थवेदनम् ॥ २२ ॥
प्रत्येति यश्चोद्यमानो गृहीतश्च न गच्छति ।
प्रतिलोमयते संज्ञां यः स प्रत्यर्थवेदनः ॥ २३ ॥
असङ्कल्पमसंवेदं प्रतिलोमयते च यः ।

---

१. 'सन्नाह्विनां' ग-पाठः.

योदोषं भजतेऽत्यर्थं स स्यात् कर्कशवेदनः ॥ २४ ॥

यः श्लक्ष्णः सर्वभावेषु विशुद्धश्चोत्तमोत्तमः ।
तं सिद्धवेदनं प्राहुर्मातङ्गं मुनिपुङ्गवाः ॥ २५ ॥

इति मातङ्गलीलायां
सत्त्वलक्षणाधिकारोऽष्टमः पटलः ॥

---

## अथ नवमः पटलः ।

अतिमधुररसानां सेवया पत्रभङ्गैः
कबळकुबळशष्पैरन्नपानैर्यथोक्तैः ।
श्रुतिसुभगवचोभिः पांसुपङ्काम्बुदानै-
र्भवति मुदितचेताः कामचारेण नागः ॥ १ ॥

यथा यथा हर्षमुपैति नागस्तथा तथा धातुरुपैति वृद्धिम् ।
अतः करिण्या सहचार इष्टो ह्यनर्गळं चाम्भसि संविहारः ॥ २ ॥

गण्डूषाद्भिः परिमलभरोद्गारिणा वारिणा यत्
फुल्लाम्भोजे सरसि रमते सेवमानो बिसानि ।
यद्रोचिष्णुः श्रयति यवसं स्वेच्छया संप्रचारो
हर्षादस्मात् स्फुरति करिणो धातुसाम्यं नरेन्द्र ! ॥ ३ ॥

हर्षाधिकत्वान्नागानां मदो भवति पार्थिव ! ।
वियुक्तस्य तु हर्षेण मदो नागस्य हीयते ॥ ४ ॥

अक्षितालुकटश्रोत्रनाभिकोशकरस्तनैः ।
स्रवेत् तनूरुहैरेवं बहुधैव मदो नृप ! ॥ ५ ॥

प्रहर्षः शीघ्रता गन्धो गातिर्देहस्य गन्धता ।

क्रोधो वीर्यमभीरुत्वमष्टौ मदगुणाः स्मृताः ॥ ६ ॥

सृष्ट्वा पुरा मदमजोऽथ तदर्धभागं
क्षिप्त्वा चराचरजगत्सु गजेषु चार्धम् ।
निक्षिप्तवानपरमप्यथ तेन मत्ता
युध्यन्ति कोपमुपयान्ति च तेऽभिभूताः ॥ ७ ॥

प्राप्नुवन्त्यार्त्तवीं वृद्धिं मदद्दष्ट्या महीरुहाः ।
स्मर्यमाणमदेनान्ये प्राणिनोऽपि मुदान्विताः ॥ ८ ॥

राष्ट्रे वा नगरे प्रमाद्यति यदि क्षोणी सुभिक्षा भवेत्
पूर्वे दक्षिणतः कटे यदि जयो राज्ञो नियन्तुर्भवेत् ।
वामे चेत् पृथिवी सुवृष्टिरुचिरा कोशे यदि स्फूर्जते
कोशेनापि कटद्वयेन च समं मुञ्चेद्यशस्वी नृपः ॥ ९ ॥

वल्मीकस्थाणुगुल्मक्षुपतरुमथनः स्वेच्छया हृष्टदृष्टि-
र्यायाद् यत्रानुलोमस्त्वरितपदगतिर्वक्रमुन्नाम्य चोच्चैः ।
कक्ष्यासन्नाहकाले जनयति च मुहुः शीकरं बृंहितं वा
तत्कालं वा मदाप्तिर्जयकृदथ रदं वेष्टयन् दक्षिणं च ॥ १० ॥

स्खलितगतिरकस्मात् स्रस्तकण्ठोऽतिदीनः
श्वसिति मृदु सुदीर्घं न्यस्तहस्तः पृथिव्याम् ।
द्रुतमुकुलितदृष्टिः स्वप्नशीलोऽलसाङ्गो
भयकृदमितभक्षी नैकशो मूत्रकृच्च ॥ ११ ॥

मधुरुचिनखदन्तप्रेक्षणो नीलमेघच्छवि-
ररुणदृगन्तः पद्मकिञ्जल्कबिन्दुः ।
अपरगजविरोधी पांसुपाथोविहारै-
र्भवति च कटपूर्णः सुन्दरो वारणेन्द्रः ॥ १२ ॥

---

१. 'त्वरित' ग-पाठः.

धाराळदानजलधौतकपोलभागः
संवर्त्तमेघसदृशस्तनिताभिपूर्णः ।
दूरस्थितानपि निहन्तुमनाः प्रधाव-
न्नुक्तो गजाधिपतिरार्द्रकपोलितो यः ॥ १३ ॥

तिर्यक्तिर्यङ् नयनमसकृत् पक्षयोर्वीक्षमाणो
बिन्दुं बिन्दुं विसृजति मदं कोशदण्डेन नागः ।
पश्चाद् गन्तुं व्यवसितमना बृंहते भूरिदानः
स्तम्भद्वेषी चतुरगमनो लक्ष्यते योऽनिबन्धात् ॥ १४ ॥

सप्तच्छदाम्भोजसमानगन्धः क्रुद्धः सदा कुङ्कुमवर्णदानः ।
आचोदितो हस्तिरथाश्वसङ्घान्नासादितो गन्धचरामवस्थाम् ॥१५॥

अभिलषति नगर्यामन्नपानं च चाट्नन्
निशि च तमसि तिष्ठेदप्रगृह्यो नियन्तुः ।
करितुरगपदातीन् प्राप्य किञ्चिन्न मुञ्चेद्
गुणितरुषमुपेतः क्रोधधीः कुञ्जरेन्द्रः ॥ १६ ॥

अतिक्रान्तावस्थो गजपतिरिदं स्थावरचरं
जगत् सर्वं हन्तुं समभिलषति क्रोधकलुषः ।
न चैकत्र स्थायी परकरटिघण्टां न सहते
निजच्छायाद्वेषी भवति सततं धावनपरः ॥ १७ ॥

निवृत्तमदसञ्चयो विगतवेगकोपोद्धृतिः
प्रवृत्तमृदुगात्रसञ्चरणकेळिभास्वद्वपुः ।
विमुक्तगजमत्सरो मदनिवर्त्तने ह्रासने
पयोद इव राजते परिविमुक्ततोयागमः ॥ १८ ॥

---

१. 'धनीं' क-ख-पाठः.

क्षीयन्ते मदवारणस्य नितरां दानस्रुतेर्धातवो
जायन्ते प्रबलानि रोगनिकराण्याश्वेव धातुक्षयात् ।
अन्याब्देषु मदोद्गमं न भजते तेषां क्षयात् पूर्वतः
शान्तिं तस्य मदस्य धातुपरतो मासत्रयात् कारयेत् ॥१९॥

सहामृताशिग्रुबलाद्विमूर्वाकापित्थसप्तच्छदचन्दनानाम् ।
कदम्बगुञ्जामधुकाश्वगन्धाजीवन्तिकाशाल्मलिसूरणानाम् ॥ २० ॥

वृश्चीरसेव्येक्षुरकुक्कुटाण्ड-
गुञ्जाश्वगन्धागुरुगोक्षुराणाम् ।
केरीपयःक्षौद्रयुतो गजानां
पिण्डः प्रदेयो मदसम्भवेऽयम् ॥ २१ ॥

कोरण्डमल्लिकानिम्बतिल्वमूलैः ससैन्धवैः ।
सेङ्गुदैर्मधुना पिण्डो देयो रोषविवर्धनः ॥ २२ ॥

मातुलुङ्गसुवहासहाकणासप्तपर्णविजयेङ्गुदीमधु ।
दुग्धपिष्टमिदमङ्गलेपितं मत्तवारणवरं वशं नयेत् ॥ २३ ॥

इति मातङ्गलीलायां
मदभेदाधिकारो नवमः पटलः ।

---

अथ दशमः पटलः ।

वारीकर्मवशाविलोभनविधिभ्यां चानुगत्या तथै-
वापातेन ततोऽवपातत इतीहेभग्रहः पञ्चधा ।
निन्द्यास्ते तु यथोत्तरं किल गजा नश्यन्ति यस्मात्ततो
वर्ज्यावन्त्यभवावुभावपि विशेषादेतयोश्चान्तिमः ॥ १ ॥

---

१. 'सहते' ग-पाठः.

क्रोशप्रायवितानदीर्घमहिता वारी निखातैर्दृढै-
र्वृक्षाद्यैः परितो वृतिं च परिखां कृत्वा बहिर्दुस्तराम् ।
द्वारस्योभयतः प्रकल्पितवृतिद्वन्द्वान्तरस्थां क्रमाद्
विस्तीर्णां च बहिर्मुखां वितनुयाद्वीथीं च वेण्वादिभिः ॥ २ ॥

उद्धृत्योपरि सन्निबध्य च कवाटं द्वारि वार्यन्तरे
दारुस्तम्भमितस्ततश्च सुदृढं कृत्वा सधारं बहुम् ।
इक्ष्वाद्यत्र विनिक्षिपेदथ गजान् संवार्य भेर्यादित-
स्त्रस्तानत्र निवेश्य चार्गलशिखापाशांश्च भिन्द्याद् द्रुतम् ॥३॥

कक्ष्याबन्धककुन्तवेणुसृणिपाशाद्यैर्युता हस्तिपा-
स्तस्मिन् द्वित्रदिनं प्रतीक्ष्य पुनरभ्येत्याशु वार्यन्तरम् ।
स्तम्भोपान्तगता गजानपि गृहीत्वोपायवन्तो दृढं
सम्बध्यात्र गुणान्वितानथ बहिर्यूथं च विद्रावयेत् ॥ ४ ॥

कक्ष्याभागे च कण्ठे मृदुतरदृढपाशैर्गजं चारु तूर्णं
बध्नीयाच्चापराङ्घ्रौ निगळनमपि तत्पादयोरप्यमीषु ।
बध्वा पाशानथात्यायतसुदृढतरानग्रतो हास्तिपेन्द्रै-
राकृष्याकृष्य मन्दं गमयतु शिथिलीकृत्य पाश्चात्यपाशम् ॥ ५॥

स्तम्भात् स्तम्भान्तरं त्वेवं यापयित्वा शनैर्गजान् ।
शालां प्रवेशयेदन्यैराप्तैर्दन्तिवरैः सह ॥ ६ ॥

आप्ताश्चर्मपटैर्निबद्धजठराः कृत्वा वशाः पञ्चषा-
स्तच्चर्मान्तरशायिनो गजभटाः पाशादिभिः संयुताः ।
आराद्यूथमथाङ्गुलिप्रहरणैः प्रापय्य ताः पञ्चषान्
बध्नीयुश्च गजान् जवादिति वशालोभो वशालोभनात् ॥ ७ ॥

वरागुरुक्षीरमहीरुहत्वङ्-
मालेयकालेयकसेव्यलोध्रैः ।
स्नाता सुशीतैः कलशस्थिताद्भि-
र्वशा गजानां तु विलोभनी सा ॥ ८ ॥

क्षौद्रोशीरनतैश्च मद्यसहितैर्हस्तीन्द्रमूत्रेण वा
लेपोऽयं तु वशावराङ्गनिहितो वश्यो गजानां वरः ।
तद्वद् बिल्वक[1]कुक्कुटाण्डककरञ्जोद्भूतबीजैस्तथा
लेपोऽयं च वशं नयेद्गजवरान् सम्मिश्रितैर्धन्वनैः ॥ ९ ॥

पथ्यावायसचाषपत्र[2]नखमञ्जिष्ठासहाशारिबा-
गोशृङ्गाल*सितेषुपुङ्खसुवहाक्षोणीकदम्बाम्बुजैः ।
पुत्रश्चारिनताजरोमखुरमूत्राद्यैर्मयूरीशिखा-
मालेयाञ्जननागपुष्पमधुभिर्वश्याञ्जनं योजयेत् ॥ १० ॥

भेरीतूर्यककाहलादिनिनदैर्विद्राव्य नागान् भृशं
भीतानाशु सदा ससैन्यमनुधावन्तो भटा निर्भयाः ।
यावत् पादपरिश्रमेण कळभाः स्तब्धाः स्युरेतांस्तदा
बध्नीयुश्चतुरा जवादनुगताख्योऽयं गजानां ग्रहः ॥ ११ ॥

बह्वग्रास्त्वथ वर्त्तुळीकृतनिबद्धाग्राः पृथग् रज्जवः
केरीवल्कशलाकिकादिरचिताः पूगद्रुनाहोन्मिताः ।
प्रायः षष्टिकरायताः सुनिहिताश्चेतस्ततः पांसुभिः
संच्छन्नाः करमात्रनिम्नधरणीगर्तेऽतिविस्तारिते ॥ १२ ॥

निक्षिप्यात्र मृणाळवेणुकदलीपुण्ड्रेक्षुकाण्डादिकं
तान् पाशानपि सन्निबध्य सुदृढे वृक्षेऽत्र दक्षा भटाः ।

---

१. 'तिल्व' ग-पाठः. २. 'मूत्र' ग-पाठः.

---

* लसकेति स्यात् .

संछन्नाः प्रतिपाल्य भक्षणपरान् बध्नीयुराशु द्विपान्
पाशाकर्षणतो निपात्य दृढमित्यापातसंज्ञो ग्रहः ॥ १३ ॥
गर्ते हस्तचतुष्कनिम्नकरयुग्मव्यासदोःपञ्चका-
यामं वेणुदलैः कटैश्च पिहितं कृत्वा मृदाच्छाद्य तम् ।
तस्मिन् भक्ष्यपरिस्तृ[1]ते तु कलभाना पातयित्वा भटा
बध्नीयुः सुदृढं गजग्रह इति प्रोक्तोऽवपाताह्वयः ॥ १४ ॥

इति मातङ्गलीलायां

गजग्रहाधिकारो दशमः पटलः ।



अथ एकादशः पटलः ।

वन्यास्तत्र सुखोषिता विधिवशाद् ग्रामावतीर्णा गजा
बद्धास्तीक्ष्णकटूग्रवाग्भिरतिशुग्भीमोहबन्धादिभिः ।
उद्विग्नाश्च मनःशरीरजनितैर्दुःखैरतीवाक्षमाः
प्राणान् धारयितुं चिरं नरवशं प्राप्ताः स्वयूथादथ ॥ १ ॥
शैलानां कटकेषु निर्झरजले पद्माकरे सिन्धुषु
स्वच्छन्देन करेणुकाभिरटवीमध्येषु विक्रीडितम् ।
स्मारंस्मारमनेकधा[2]ग्रनिहितं पुण्ड्रेक्षुकाण्डादिकं
नो काङ्क्षत्यतिदुर्मना बहुविधैर्दुःखैरुपेतः करी ॥ २ ॥
पूर्वानुभूतमटवीषु सुखं विचिन्त्य
ध्यायन् मुहुः स्तिमितवालधिकर्णतालः ।
ग्रामव्यथाभिरधिकं कृशतामुपेत्य
कैश्चिद्दिनैर्मृतिमुपैति करी नवीनः ॥ ३ ॥

१. 'रिष्कृते' ग-पाठः. २. 'धास्यनि' ग-पाठः.

निष्ठ्यूतनेत्रयुगलश्च गुदे च नाभौ
गात्रापरे[1] श्वयथुमान् भवति द्विपोऽयम् ।
नाश्नाति नैव रमते न च वेत्ति संज्ञां
राज्यच्युतो नृप इवाधिमुपैति कामम् ॥ ४ ॥

अण्डं तैजसमण्डजाश्च करिणो जन्मप्रभृत्यौष्ण्यतः
सन्तप्ताः शिशिराम्बुसेचनरजःपङ्कादिभिर्हर्षिताः ।
तस्मादङ्गप! तोयमेव करिणां प्राणास्ततः कामत-
स्तोयेनोपचरेद् गजान् भवति तद्धातुप्रसादो ह्यतः ॥ ५ ॥

आनीतान् वनतो गजान् हिमजलैः सिञ्चेत् तथा पायये-
दाकर्ण त्ववगाहयेदुषसि तद्ग्लान्यादिशान्त्यै जले ।
एवं चाथ दिनावसानसमये स्वैरं तथाळानयेत्
पश्चात् सेचनलेपनादि[2] शतधौताज्येन कुर्यादपि ॥ ६ ॥

कृतावगाहस्य मतङ्गजस्य
शाल्योदनं मुद्गरसाज्यमिश्रम् ।
पानं च दद्यात् सहशर्करं च
पुण्ड्रेक्षुकाण्डानि मनोहराणि ॥ ७ ॥

शय्या तोयावलोकश्चलनमनुगुणं भेषजं धूलिमृष्टिः
शालास्तम्भप्रवेशो घृतगुळसहितं भोजनं पूलदानम् ।
निर्वाणं तोयपानं तिलजपदयुतं भोजनं चापराह्णे
भैषज्यं चाथ संवेशनमिति दिनचर्या गजानां क्रमेण ॥ ८ ॥

पद्माद्युत्पलनालकन्दकदलीशालूकशृङ्गाटकान्
दूर्वोदुम्बरसल्लकीक्षुनळदन्यग्रोधवेण्वादिकान् ।

1. 'त्रान्तरे' ग-पाठः. 2. 'क्षालन' ग-पाठः.

प्लक्षाश्वत्थकपित्थपल्लवफलान्यार्त्तिप्रशान्त्यै सदा
देयान्यङ्गप! दन्तिनां तु मधुराण्यन्यान्यभीष्टानि च ॥ ९ ॥

ये पर्यश्रुदृशः कृशाश्च शिशवो भारार्दिताः पित्तला-
स्तन्वङ्गाः सतताध्वकर्मविहता वृद्धा वशानिस्स्पृहाः[1] ।
सासृङ्मांसमदक्षयाश्च विवशा ये स्तब्धगात्राः परे
तेषां साध्यतमं हितं घृतमिति[2] ब्रूते कलिङ्गेश्वरः ॥ १० ॥

नागानामिह तण्डुलस्य कुडुबं देयं तृणान्तर्गतं
चैकैकं परिवर्धयेच्च कुडुबं यावद्भवेदाढकम् ।
एवञ्चौदनपिण्डमप्यनुदिनं संवर्धयेत् तद्वदे-
वान्यद्भक्षणसाधनं च विहितं सन्दापयेद् युक्तितः ॥ ११ ॥

गोधूमं च यवं गुळाज्यसहितं स्विन्नं सदा दापयेत्
तद्वत् केवलतण्डुलेन सहितं गोमूत्रसृष्टं तु वा ।
प्राग्वत् तत् प्रतिवासरं कुडुबसंवृद्ध्याढकान्तं क्रमे-
णैलात्र्यूषणहिङ्गुजीरकयुगाजाजीविलङ्गान्वितम् ॥ १२ ॥

उषसि यवसतैलं मात्रयार्धाढकं स्यात्
प्रवरवयसि मध्ये तच्चतुर्भागहीनम् ।
अधमवयसि तद्वत् तत्त्रिभागोनमुक्तं
बलमदजवकारि व्याधिविध्वंसनं च ॥ १३ ॥

मानं तु मध्यवयसः पलविंशतिः स्याद्
व्याध्यौषधं प्रतिदिनं परिकल्प्य मेयम् ।
प्रस्थद्वयं प्रतिदिनं तु घृतस्य मात्रा
तद्वृद्धिहानिकरणं च यथाबलं स्यात् ॥ १४ ॥

---

१. 'निस्सृताः' क-ख-पाठः. २. 'परं घृतमिदं' ग-पाठः.

कृसरो दधिपिण्याकयुक्तो गुळसमन्वितः ।
प्रदेयो बृंहणायाथ प्रतिपानं च दन्तिने ॥ १५ ॥

प्रत्यराति यवसस्य च भारं तण्डुलस्य चतुराढकमुक्तम् ।
स्नेहमष्टकुडुबं लवणस्य स्युः पलानि दश चापि गुळस्य ॥ १६ ॥

‡विळङ्गाक्षीबकुल्माषमाषगोधूमसंस्कृ(ताः? तम्) ।
मोदकार्थं महीपाल! पिष्टमाढकमिष्यते ॥ १७ ॥

न भेदमायान्ति नखास्तलं च
न क्षीयते नाध्वनि पाददाहः ।
भवन्ति केशाश्च न चापि दृष्टि-
र्निहन्यते सन्ततपादसेकात् ॥ १८ ॥

त्वग्दोषबन्धवधभि[1]व्रणशोषगात्र-
स्तम्भादिजित् क्षपितशीतसमीरकोपः ।
सक्थ्यङ्गमार्दवकरो लघुबृंहणश्च
स्निग्धत्वसत्त्वबलसौख्यकृदङ्गसेकः ॥ १९ ॥

अभीक्ष्णं साधु प[2]श्यन्ति घृताभ्यङ्गेन नित्यशः ।
अक्षिरोगा न जायन्ते स्थिरा दृष्टिश्च दन्तिनाम् ॥ २० ॥

स्थिरवेष्टौ दृढौ दन्तौ स्निग्धौ व्यधविवर्जितौ ।
दन्तघातसमर्थौ च दन्ताभ्यङ्गेन नित्यशः ॥ २१ ॥

जयति च बहु भुक्तं शोधनं मूत्रवस्तेः
कृमिहृदनिलहारि व्याधिविध्वंसनं च ।
अरुचिशमनमाशु क्लेदनं वारणानां
लवणममृततुल्यं पक्तिधर्मावतारे ॥ २२ ॥

---

१. 'धजव्रण' ग-पाठः. २. 'भक्ष्यन्ति'(?) क-ख-पाठः.

---

‡ विडङ्गमेव डलयोरभेदादेवम्.

पूर्वाह्णभक्ते लवणं वर्जयेद्दोषवर्धनम् ।
अपराह्णे तु लवणं दीपनं दोषनाशनम् ॥ २३ ॥

हितमिह ससितं घृतं पयोभि-
र्निहितमनुष्णतरेषु भोजनेषु ।
कथयति परिपूजितं च दुग्धं
करटिषु पानविधौ मुनिः सुशीतम् ॥ २४ ॥

बालातपः शशिकला रुचिरश्च शालि-
र्गोधूमधान्यमपि यत् क्रिमिभिर्न दुष्टम् ।
स्विन्नैरमीभिरुपकॢप्तमनल्पमांसं
भोज्यं गजस्य विनियोज्यमिभागमज्ञैः ॥ २५ ॥

कल्याणानां तु दद्यात् त्रिकटुकरजनीद्वन्द्वकुष्ठाजमोद-
प्रत्यक्पुष्पाकरञ्जद्वयलशुनवचास्थापनीरामठानाम् ।
सिद्धार्थारिष्टबीजज्वलनपटुवरालोहरेणुक्रिमिघ्न-
न्यग्रोधीनां च चूर्णं तिलरससहितं शस्तमेतत्प्रबोधे ॥ २६ ॥

एलावचालशुनसैन्धवनागरैश्च
सिद्धार्थहिंगुमरिचक्रिमिशत्रुभिश्च ।
कॢप्तं तु तैललुलितं कबलं गजाय
सुप्तोत्थिताय वितरेत् कफवातशान्त्यै ॥ २७ ॥

प्रातः साज्यगुळं शरत्सु विहितं ग्रीष्मे च शाल्योदनं
सायं तल्लवणेन तैलसहितं त्वन्येषु तद्व्यत्ययात् ।
कुल्माषं गुळयुक्तमोदनयुतं चादापयेद् दन्तिनां
तत्तेजोबलवह्निकृद्गुलयुतानन्यान् परागानपि ॥ २८ ॥

---

१. 'नमिदं संदा' ग-पाठः.

सञ्जातवीर्यरसगुल्मलताप्रतान-<br>
भोजी तुषारशिशिरार्ककरे हिमर्तौ ।<br>
जम्बालपांसुजलकेलिकुतूहलेन<br>
प्रायः कफोपचयमेव गजो बिभर्ति ॥ २९ ॥

या जाङ्गलस्थलभुवो विलसन्ति[1] देशे<br>
तत्सम्भवेन यवसेन शरीरवृत्तिः ।<br>
पादेषु मूर्धनि गजस्य हितश्च सेक-<br>
स्तैलान्वितेन च मषीपटलेन लेपः ॥ ३० ॥

चुचुन्दरीचित्रकवाजिगन्धाकार्पासदन्तीरजनीवराणाम् ।<br>
मषिप्रलेपस्तिलतैलयुक्तः स्तम्बेरमाणां शिरसि प्रशस्तः ॥३१॥

शाला छन्ना सवह्निस्त्रिकटुपटुयुता वारुणी वा प्रसन्ना<br>
मन्दोष्णा सायमन्नं दधिरससहितं कम्बलैरावृतिश्च ।<br>
इक्षोः सेवा समात्रा कबल[2]कुवलयोः शीलनं नित्यचारः<br>
पाथःक्रीडाविमुक्तिर्यवसपरिहृतिः शैशिरोऽयं विधिः स्यात् ॥

उद्यानेषु सुगन्धिषु प्रतिदिनं वासः सगोधूमकं<br>
शाल्यन्नं दधितैलयुक्तमशनं भाराध्वकर्माल्पता ।<br>
नागानामवगाहनं हिततरं नद्यादिषु स्वेच्छया<br>
खाद्यास्तत्र बलाकलायचणका वासन्तिकोऽयं विधिः ॥ ३३ ॥

अध्वाशीलनमम्बुपूरितदृतिस्यन्दक्रिया मस्तके<br>
लेपो मूर्धनि सर्पिषा च शतधौताख्येन कालत्रये ।<br>
शीतांशोः करसङ्गतिश्च सगुळाज्यं सक्तुसंसेवनं<br>
स्थानं शीतलमम्बुपङ्कविहृतिः सोऽयं विधिर्ग्रैष्मिकः ॥३४॥

---

१. 'न्ति तेषां' ग-पाठः. २. 'लक' ग-पाठः.

कूपोत्थं सलिलं तृणं स्थलभवं पङ्कोज्झितं चास्पदं
शालायामपि मक्षिकामशकयोर्नाशाय धूमोद्गमः ।
वस्त्यास्थापनकर्म जाङ्गलरसस्नेहान्वितं चौदनं
यूषो जाठरवह्निवर्द्धनकरश्चायं विधिर्वार्षिकः ॥ ३५ ॥

आकण्ठं[1] भृशमञ्जरीस्फुटरसः शालिः सुशीतास्पदं
देयाः सप्रसवाश्च माषसहिता मुद्गा मकुष्टादयः ।
गोधूमः सलिलाप्लुतिः प्रतिदिनं सायं स एवाशनं
स्विन्नक्षीरयुतं तथा घृतरसाढ्यं शारदोऽयं विधिः ॥ ३६ ॥

सेवा बालातपस्य प्रसभजलचरानूपजो वेशवार-
स्तद्भ्नैः पाथस्यगाधे सकृदपि करिणां शस्यते चावगाहः ।
स्नेहस्तैलेन कार्यः शिरसि च सततं हैमनोऽयं विधिः स्या-
देवं सर्वर्तुचर्या क्रमश इति बुधैर्दर्शिता वारणानाम् ॥ ३७ ॥

भीरुर्भिन्ननखोऽनवस्थितमनाः प्रत्यर्थवेदी चलत्-
स्थूलाङ्घ्रिः परुषच्छविर्न सहनः स्तब्धाल्परोमोत्सुकः ।
लक्ष्यस्नायुसिराविरूक्षरदनः शीघ्रो विरूपेक्षणो
दुर्मेधा विषमश्च कर्मसु गजो यः स स्मृतो वातिकः ॥ ३८ ॥

चण्डो निर्मुण्डिताक्षस्तनुकररदनत्वङ्नखश्रोत्ररोम-[2]
ग्रीवागात्रापराङ्घ्रिर्बहुभुगरुणदृग् दुर्बलो बह्लीकः ।
छायेच्छुर्द्वेष्टि घर्मं विसृजति न चिराद् दानमुत्तानवेदी
ह्रीयेतोच्चैः प्रहीणं श्रयति पुनरिभः पैत्तिको नातिशोभः ॥ ३९ ॥

हर्यक्षः सुमहाङ्गुलीकरशिरःकुम्भादिरीषत्प्रियो
नातिक्रुद्ध्यति[3] मन्दवह्निरभयो गम्भीरवेदी स्थिरः ।

१. 'आकुष्ठम् भृत' ग-पाठः. २. 'र्भं' ग-पाठः. ३. 'नागः कुप्यति' ख-पाठः.

अक्षोभ्यः सुहरो विलीनतरलो वीणादिगीतप्रियः
पीनस्निग्धरदोऽतिमन्दगमनः कामी गजः श्लैष्मिकः ॥ ४० ॥

मध्वक्षिदन्तः समसुस्थिताङ्गः[2]
शूरोऽकृशो भूरिमदः समाग्निः ।
अन्वर्थवेदी च सुचापवंशः
समः प्रकृत्या भवति द्विपोऽयम् ॥ ४१ ॥

विकृतिं दोषदूष्याणां लक्षणानां फलाफलम् ।
तत्त्वतो नैव जानन्ति मुनयः किन्तु मानवाः ॥ ४२ ॥

नागानां वनवास एव विहितस्तस्याप्यलाभादसा-
त्म्याकामाशनपानतश्च विषमाजीर्णादिभिर्भोजनैः ।
दुःस्थानेष्वटनादिभिश्च शयनाद् दोषाः समीरादिकाः
कुप्यन्त्याशु शरीरमानसभवान् रोगांश्च कुर्वन्ति च ॥ ४३ ॥

मूत्रक्षरणतो नित्यं कोशो मत्तस्य पच्यते ।
गैरिकस्य पलेनास्य सदा साज्येन सेचनम् ॥ ४४ ॥

आचूषणं चाक्षिनिमीलनं च
घ्राणं तथा भूद्रुमखानिलानाम् ।
आलस्यमास्यान्तरशोषणं च
कर्णाग्रयोः स्पन्दनमप्यरागः[3] ॥ ४५ ॥

मुहुर्मुहुश्चैव विजृम्भणं च
ध्यानं च पांसोः परिमर्षणं च ।
मूत्रारुणत्वं नयनारुणत्वं
तृष्णाभिभूतस्य गजस्य चिह्नम् ॥ ४६ ॥

---

१. 'ष्मलः' ग-पाठः.  २. 'राङ्गः' ग-पाठः,  ३. 'प्यरोगम्' ग-पाठः.

व्रणाः सर्वे जलेनैव प्रायो रोहन्ति दन्तिनाम् ।
नश्यन्ति क्षुत्पिपासाद्याः पद्मयोनेरनुग्रहात् ॥ ४७ ॥
प्रायशः कृमिजा रोगा भवन्त्यङ्गप! दन्तिनाम् ।
तस्मात् कृमिहराण्येव नित्यं देयानि दन्तिनाम् ॥ ४८ ॥

हिङ्ग्वष्टकं चूर्णराजं सप्तविंशतिगुग्गुलुम् ।
इत्यादीनि च चूर्णाणि दद्यात् तैलघृतानि च ॥ ४९ ॥

पाकलाख्यज्वरं मर्त्त्यज्वरोक्तैरेव लक्षणैः ।
लक्षयेन्मतिमांस्तस्मात् तदेव च चिकित्सितम् ॥ ५० ॥

ये ये भेदा मानुषेभ्यो गजानां
ते ते प्रोक्ता दोषदूष्यादिकेषु ।
तस्मात् तज्ज्ञैर्व्याधिभेदं विदित्वा
मर्त्त्यानामेवात्र कार्या चिकित्सा ॥ ५१ ॥

इति मातङ्गलीलायां

गजरक्षणादिनर्तुचर्याधिकार एकादशः पटलः ।

---

अथ द्वादशः पटलः ।

नागाध्यक्षोऽस्तु धीमान् नरपतिसदृशो धार्मिकः स्वामिभक्तः
शुद्धः सत्यप्रतिज्ञो व्यसनविरहितः संयताक्षो विनीतः ।
उत्साही दृष्टकर्मा प्रियवचनरतः सद्गुरोरात्तशास्त्रो
दक्षो धीरः शरण्यो गदहरणचणो निर्भयः सर्ववेत्ता ॥ १ ॥

शिक्षाप्रक्रमदक्षमङ्कुशगदासञ्चारणप्रक्रिया-
भेदज्ञं बलदेशकालनिपुणं दानक्रियादक्षिणम् ।

आरोहेष्ववरोहणेषु कुशलं शान्तं वयोमर्मणां
ज्ञातारं मुनयो वदन्ति नृपतेराधोरणं दन्तिनाम् ॥ २ ॥
रेखावानपि युक्तिमांश्च बलवान् यन्ता त्रिधेत्यग्रिमो
नागस्यैव तु वर्ततेऽनुगुणमत्रात्मेभयोर्मध्यमः ।
पाश्चात्यो निजबुद्धिशक्तिविभवेनैवेति ते हस्तिपाः
कल्प्याश्चोत्तममध्यमाधमतया वर्ज्योऽत्र तेष्वन्तिमः ॥ ३ ॥
आरोहेष्ववरोहणेषु करिणां स्कन्धासनेष्वासनैः
पाश्चात्येऽपि च चोदनासु वचसा पादाङ्कुशाभ्यामपि ।
वीथीमण्डलयानधावनविधौ व्यावर्तने धारणे
प्रत्यर्थिद्विपयोधनेऽपि कुशलो यन्ता द्विषां दुर्जयः ॥ ४ ॥
वशे कुर्वन् व्यालानकलितमदानाशु मदयन्
वितन्वन् मातङ्गान् जवनरहितानात्तरभसान् ।
निरीहानाहन्तुं विदधदधिकं घातनिपुणान्
गजारोहे दक्षः क्षितिपतिजनानामभिमतः ॥ ५ ॥

मातङ्गास्त्रिविधास्त्रयः प्रणिधयस्तिस्रो गतिप्रक्रिया-
स्त्रीणि प्रस्फुटमासनानि पुरतः पञ्चैव पश्चादपि ।
षड्भेदाङ्कुशचारणा गतिगता भेदाः पुनः पञ्चधा
स्यादारोहणमष्टधा दशविधः प्रोक्तोऽवतारक्रमः ॥ ६ ॥
भद्रमन्दमृगभेदतस्त्रिधा जातिरत्र करिणां पुरोदिता ।
वक्ष्यते प्रणिधिपूर्वकं गतिप्रक्रियादिरधुना यथाक्रमम् ॥ ७ ॥

वाक्पादाङ्कुशचोदना प्रणिधिरित्युक्ता यतश्चाह तं
त्रेधा तत्र तु वाक्प्रचोदनविधिस्तेषां तु यश्चा†न्तिमः ।

† 'आदिमः' इति स्यात्.

तं विद्यादुपलालनं हि भयकोपादेरसिद्धौ तथा
स्यात् प्रज्ञापनमन्यदत्र तु तृतीयं विद्धि सन्तर्जनम् ॥ ८ ॥

कर्मोपक्रमिकैश्च संस्कृतपदैः संशिक्षयेत् प्राकृतै-
स्तत्तद्देशजभाषया च कलभं ज्ञातुं च कर्माणि तु ।
हुङ्कारद्वयमासितुं ग्रहणकर्मण्याशु तं गृह्ण गृ-
ह्णेत्येवं प्रवदेदुपर्युपरि चैवं तत्करोत्क्षेपणे ॥ ९ ॥

तिष्ठ तिष्ठेति च स्थातुमेह्येह्यागमने तथा ।
गच्छ गच्छेति गमने बोधयेदेवमादिभिः ॥ १० ॥

पादौ ग्रैवेयके प्रोत्य च दृढनिहिताङ्गुष्ठपार्ष्णिप्रहारै-
रूरुभ्यां गाढमाबध्य च सुदृढमतिः स्थाणुवत् संस्थितः सन् ।
हस्तेनादाय यन्ता सृणिमथ सुदृढं दक्षिणेनान्यहस्ते-
नैवं तोत्रं च वेत्रादिकमवहितधीः प्रेरयेच्चारु नागम् ॥ ११ ॥

अङ्गुष्ठाभ्यां पुरः प्रेरितुमथ सुदृढं पीडयेदुन्नतास्यं
कर्तुं तावुन्नतौ तावपि वदनमधो नेतुमप्यानतौ च ।
वामाङ्गुष्ठेन विध्येत् करिणमथ नयन् दक्षिणं पार्श्वमन्ये-
नान्यं चाकर्षणार्थं गजमथ मतिमान् पार्ष्णियुग्मेन गाढम् ॥

गतयस्तु त्रिधा मन्दशीघ्रधावनभेदतः ।
प्राक्पश्चाद्वृत्ततिर्यग्व्यावर्त्तनैः *पञ्चधा तथा ॥ १३ ॥

वंशकन्धरयोर्मध्यं ककुदं स्यात् तदग्रतः ।
क्रमात् त्रीण्यासनानि स्युर्मुख्यमध्याधमानि हि ॥ १४ ॥

एकः प्रसारितः पादस्तदन्यो नतजानुकः ।
पाश्चात्यमासनं ज्ञेयमेकं जानुगतं बुधैः ॥ १५ ॥

---

*अस्य पञ्चविधत्वस्योद्देशक्रममुपेक्ष्यासनात् प्राङ् निरूपणं धर्मिप्रसङ्गानुरोधा-दिति भाति,

वंशस्योभयतः प्रसारितपदं जानुद्वयाकुञ्चितं
विद्यादानतजानुकासनमिदं तत्तूत्कटेनोत्कटम् ।
एकं तूत्कटजानुकं तदपरं नम्रं हि कूर्मासनं
विद्यात् संहतनम्रजानुयुगलं मण्डूकसञ्ज्ञं हि तत् ॥ १६ ॥

नागैरुद्धतकायसत्त्वविभवैस्तीक्ष्णप्रतापैर्जगद्
व्याप्तं नितरां समीक्ष्य कृपया स्कन्दार्थनाद्ब्रह्मणा ।
सृष्टः कश्चन पूरुषः स तु रुषा रक्तान्तदृग् दंष्ट्रि[1]या
भात्युद्यन्मुकुटः कुशाङ्कितकरस्तेनाङ्कुशाख्योऽह्ययम् ॥ १७ ॥

वज्रार्धचन्द्रनखकैतककण्टकाभा-
श्चत्वार एव सृणयो विहिता मुनीन्द्रैः ।
आविश्य तासु पुरुषः स्थितवानयं हि
मत्तातिदुष्टगजसंयमनाय नित्यम् ॥ १८ ॥

विताने च विदुर्ग्रीवानिर्याणे मस्तकेऽपि च ।
अवग्रहे च जानीयात् षड्विधाङ्कुशचारणा ॥ १९ ॥

अत्र प्राग्गमने पुरो मुखभृजस्तोदो विधेयोऽनया
पश्चान्नेतुमिहावकर्षणमथोर्ध्वं नेतुमुत्कर्षणम् ।
नेतुं चेभमधोऽवपीडनममुं सव्यं तु सव्येतरे
भागे तोद इतीत[2]रापि च यथायोगं सृणेश्चारणा ॥ २० ॥

ईषत्स्पर्शनपीडनातिहननान्युत्क्षिप्य संपीडनं
चोत्क्षिप्य प्रतिकर्षणं च पुनरुत्क्षिप्याधिकं भ्रामणम् ।
तत्रार्धाङ्गुलमात्र[3]मग्नमुदितं पूर्वं क्रमात् पीडना-
द्यर्धार्धाङ्गुलवर्धितं त्विति सृणेस्तोदक्रमो दर्शितः ॥२१॥

---

१. 'ष्ट्रवान्' क-पाठः. २. 'रितोऽपि' ग-पाठः. ३. 'मानम' ख-पाठः. 'त्रमानमु' ग-पाठः.

माधूकपुष्पमधुकालवचाश्वगन्धा-
बिल्वं पलाण्डुमरिचं च समं सुपिष्टा* ।
गोमूत्रकेण परिलेपितमङ्कुशाग्रे
यस्तेन चोदित इभः स वशं प्रयाति ॥ २२ ॥

कोशातकीक्षार[1]कटुत्रया[2]लसिद्धार्थका[3]रुष्करचूर्णमेतत् ।
तिक्ताह्वसिन्धूत्थविलङ्गयुक्तं सृणिप्रलिप्तं गजवश्यमाहुः ॥२३॥

शतपदीकृकलासशिरःशिलातुरगापित्तमृगाङ्गरुहैः कृतम् ।
भुजगकञ्चुकवृश्चिकसंयुतैः सृणिषु लेपमनेकपदर्पहृत् ॥ २४ ॥

पार्श्वयोरुभयोश्चैव निष्कोशद्वितयेऽपि च ।
पुच्छमूले गदाघातमिति पञ्चविधं विदुः ॥ २५ ॥

कर्णद्व्यङ्घ्रिचतुष्कास्यैः संप्लुत्या चैवमष्टधा ।
गजारोहोऽनुधावद्भिः पृष्ठतः सा तु संप्लुतिः ॥ २६ ॥

पुच्छपादचतुष्कास्यपार्श्वकर्णद्वयैर्गजात् ।
अवरोहणमित्येवं दशधा कीर्त्तितं बुधैः ॥ २७ ॥

इत्येवं पालकाप्यो मुनिरिभचरितं व्याकरोद्रोमपादा-
यानन्दान्दोलितात्मा नृपतिरथ मुनिं पूजयन्नर्घ्यपाद्यैः ।
अध्यासामास पृथ्वीं चिरतरमभिरक्षोद्यतोऽलं दयावा-
नस्तप्रत्यर्थिपृथ्वीपतिरखिलजगद्रक्षणे जागरूकः ॥ २८ ॥

रोमेति नाम पद्मस्य विख्यातं पूर्वसूरिभिः ।
तेनैवाङ्कितपादत्वाद् रोमपाद इति स्मृतः ॥ २९ ॥

---

१. 'क्षीर' ग-पाठः. २. 'याश्व' ग-पाठः. ३. 'कारस्क' ग-पाठः.

---

* 'सुपिष्य' इति स्यात्.

पालनाद् गजयूथस्य काप्यो गोत्रेण चेत्यतः ।
पालकाप्यस्त्वसावेवं दिव्योक्त्याभूत् तदाह्वयः ॥ ३० ॥

मुनीन्द्रोदितमातङ्गशास्त्रागाधार्णवान्मया ।
अल्पा मातङ्गलीलेति लब्धेयं शोध्यतां बुधैः ॥

इति नीलकण्ठकृतायां मातङ्गलीलायाम्
आरोहणगुणाद्यधिकारो
द्वादशः पटलः ।

मातङ्गलीला समाप्ता ।

## शुद्धिपत्रम् ।

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| २४ | १२ | नगर्या | न शय्या |
| ४० | ११ | गदा | गजा |
| ,, | १८ | मभि | मिभ |

---